# मनःशिक्षा

गुरौ गोष्ठे गोष्ठालयिषु सुजने भूसुरगणे
स्वमन्त्रे श्रीनाम्नि व्रजनवयुवद्वन्द्वस्मरणे
सदा दम्भं हित्वा कुरु रतिमपूर्वामतितरां
अये स्वान्तर्भ्रातश्चटुभिरभियाचे धृतपदः ॥१ ॥

न धर्मं नाधर्मं श्रुतिगणनिरुक्तं किल कुरु
व्रजे राधाकृष्णप्रचुरपरिचर्यामिह तनु ।
शचीसूनुं नन्दीश्वरपतिसुतत्वे गुरुवरं
मुकुन्दप्रेष्ठत्वे स्मर परमजस्रं ननु मनः ॥२ ॥

यदीच्छेरावासं व्रजभुवि सरागं प्रतिजनु
र्युवद्वन्द्वं तच्चेत्परिचरितुमारादभिलषेः ।
स्वरूपं श्रीरूपं सगणमिह तस्याग्रजमपि
स्फुटं प्रेम्णा नित्यं स्मर नम तदा त्वं शृणु मनः ॥३ ॥

असद्वार्ताविश्या विसृज मतिसर्वस्वहरिणीः
कथा मुक्तिव्याघ्र्या न शृणु किल सर्वात्मगिलनीः ।
अपि त्यक्त्वा लक्ष्मीपतिरतिमितो व्योमनयनीं
व्रजे राधाकृष्णौ स्वरतिमणिदौ त्वं भज मनः ॥४ ॥

असच्चेष्टाकष्टप्रदविकटपाशालिभिरिह
प्रकामं कामादिप्रकटपथपातिव्यतिकरैः।
गले बद्ध्वा हन्येऽहमिति बकभिद्वर्त्मपगणे
कुरु त्वं फुत्कारानवति स यथा त्वां मन इतः॥५॥

अरे चेतः प्रोद्यत्कपटकुटिनाटीभरखर-
क्षरन्मूत्रे स्नात्वा दहसि कथमात्मानमपि माम्।
सदा त्वं गान्धर्वागिरिधरपदप्रेमविलसत्-
सुधाम्भोधौ स्नात्वा त्वमपि नितरां मां च सुखय॥६॥

प्रतिष्ठाश धृष्टा श्वपचरमणी मे हृदि नटेत्
कथं साधु प्रेमा स्पृशति शुचिरेतन्ननु मनः।
सदा त्वं सेवस्व प्रभुदयितसामन्तमतुलं
यथा त्वां निष्काश्य त्वरितमिह तं वेशयति सः॥७॥

यथा दुष्टत्वं मे दवयति शठस्यापि कृपया
यथा मह्यं प्रेमामृतमपि ददात्युज्ज्वलमसौ।
यथा श्रीगान्धर्वाभजनविधये प्रेरयति मां
तथा गोष्ठे काक्वा गिरिधरमिह त्वं भज मनः॥८॥

मदीशानाथत्वे व्रजविपिनचन्द्रं व्रजवने-
श्वरीं तन्नाथत्वे तदतुलसखीत्वे तु ललिताम्।
विशाखां शिक्षालीवितरणगुरुत्वे प्रियसरो-

गिरीन्द्रौ तत्प्रेक्षाललितरतिदत्वे स्मर मनः ॥९॥

रतिं गौरीलीले अपि तपति सौन्दर्यकिरणैः
शचीलक्ष्मीसत्याः परिभवति सौभाग्यवलनैः ।
वशीकारैश्चन्द्रावलिमुखनवीनव्रजसतीः
क्षिपत्याराद्या तां हरिदयितराधां भज मनः ॥१० ॥

समं श्रीरूपेण स्मरविवशराधागिरिभृतो
र्व्रजे साक्षात्सेवालभनविधये तद्गणयुजोः ।
तदिज्याख्याध्यानश्रवणनतिपञ्चामृतमिदं
ध्यन्नीत्या गोवर्धनमनुदिनं त्वं भज मनः ॥११ ॥

मनःशिक्षादैकादशकवरमेतन्मधुरया
गिरा गायत्युच्चैः समधिगतसर्वार्थयति यः ।
सयूथः श्रीरूपानुग इह भवन्गोकुलवने
जनो राधाकृष्णातुलभजनरत्नं स लभते ॥१२ ॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचितस्तवावल्यां श्रीप्रार्थनामृतस्तोत्रं सम्पूर्णम् ।